( ३ )। 'पतिः' तस्या वध्वाः 'पश्चात्' 'अवस्थाय', 'युग्मन्तम्' युग्मानि फलानि यस्मिन् तादृशम् 'औदुम्बरम्' उदुम्बरगुच्छं 'शलाटुग्रप्सम्' शलाटुनामफलविशेषस्य स्तवकञ्च 'अयमूर्जावतो वृक्षः ( मं० ब्रा० १,५,१ )'—'इति' इमं मन्त्रमुच्चरन् 'आ बध्नाति' वध्वाः मस्तके कण्ठे बाहौ कट्यां नाभौ अञ्चले वेति न नियमः ( ४ )। 'अथ' अनन्तरम्। 'सीमन्तम्' केशरचना-विशेषम् 'ऊर्द्ध्वम् उन्नयति' उन्नयेत् पतिरेव। तत्र 'दर्भपिञ्जू-लीभिः' शुष्कैः गर्भसारैश्च कुशासमूहैः 'भूः'—'इति' मन्त्रेण 'प्रथ-मम्' उन्नयनम्; 'भुवः'—'इति' मन्त्रेण 'द्वितीयम्' उन्नयनम्; 'स्वः'—'इति' मन्त्रेण 'तृतीयम्' उन्नयनम् ( ५ )। 'वीरतरेण' शरतृणविशेषेण 'येनादितेः ( मं० ब्रा० १,५,२ )'—'इत्येतया ऋचा' च सीमन्तमूर्द्ध्वमुन्नयति पतिः ( ६ )। 'अथ' तदनन्तरम् 'राकामहम् ( मं० ब्रा० १,५,३ )'—'इत्येतया ऋचा' 'पूर्ण-चात्रेण' सूत्रपूर्णतर्कुणा सीमन्तोन्नयनम् (७)। 'च' किञ्च 'यास्ते राके सुमतयः ( मं० ब्रा० १,५,४ )'—'इति' मन्त्रं पठन् पतिः 'त्रिश्वेतया' त्रिषुस्थानेषु श्वेतवर्णया 'शलल्या' शल्लकी-कण्टकेन सीमन्तमूर्द्ध्वमुन्नयेत् ( ८ )। ततश्च; 'स्थालीपाकः' स्थाल्यां पक्वः 'उत्तरघृतः' पाकान्ते घृतमिश्रितः 'कृसरः' तिल-तण्डुलसमूहः 'कृसरः' इति कृसरलक्षणम्; 'तम्' तादृशं कृसरम् 'अवेक्षयेत्' दर्शयेत् पत्नीं पतिरिति ( ९ )। यदा सा तं पश्यति, तदैव पतिः पृच्छेत् 'किम् पश्यसि?—इति' 'उक्ता' पतिनैवं पृष्टा सा, 'प्रजाम् ( मं० ब्रा० १,५,५ )'—'इति' इमं मन्त्रं 'वाचयेत्' पत्नीं पतिः ( १० )। 'तं' कृसरं 'सा' वधूः 'स्वयं भुञ्जीत' ( ११ )। तस्मिन्नेव भोजनकाले 'ब्राह्मण्यः'

'বীরসূর্জীবসূর্জীবপত্নী'—'ইতি' এবমাদিভিঃ 'মঙ্গল্যাভিঃ গীর্ভিঃ' আশীর্বাক্যৈঃ 'উপাসীরন্' ইত্যবমিতি শ্রেষঃ (১২)।

ইতি সীমন্তোন্নয়নম্। ২—১২

সীমন্তকরণ সংস্কার কিরূপে করিতে হয় বলিতেছেন;—প্রাতে উত্তরাগ্রভাবে পাতিত কুশাসনে বধূকে বসাইয়া আ-মস্তক প্লাবিত করিয়া স্নান করাইয়া দিবে। পরে অগ্নির পশ্চিম ভাগে পাতিত উত্তরাগ্র কুশাসনে পূর্ব্বাভিমুখী করিয়া তাহাকে বসাইবে, পতিও তৎপশ্চাতে থাকিবে। অনন্তর যজ্ঞডুমুরের একটি গুচ্ছ ও শলাটুর আর একটি গুচ্ছ সেই বধূর অঞ্চলে বা শরীরের যে কোন স্থানে বাঁধিয়া দিবে। সেই গুচ্ছদ্বয় বন্ধনকালে 'অয়মূর্জ্জাবতোবৃক্ষঃ ( ম০ ব্রা০ ১,৪,১ )' এই মন্ত্রটি পাঠ করিবে। তদনন্তর সারগর্ভ শুষ্ক কুশাসমূহ নির্ম্মিত পিঞ্জূলীর (ব্রসের) দ্বারা সেই বধূর কেশবিন্যাস করিবে। 'ভূঃ' মন্ত্রে প্রথমবার, 'ভুবঃ' মন্ত্রে দ্বিতীয়বার এবং 'স্বঃ' মন্ত্রে তৃতীয়বার সীমন্তের কেশগুলি ঐ পিঞ্জূলি দ্বারা উন্নীত করিয়া দিবে। 'যেনাদিতে ( ম০ ব্রা০ ১,৫,২ )' মন্ত্রপাঠ করত যে শরের বাণ প্রস্তুত হয় সেই শরের দ্বারা সীমন্তের মধ্য চিরিয়া শোভমান করিবে। 'রাকামহং ( ম০ ব্রা০ ১,৫,৪ ) মন্ত্রপাঠ করত স্থানত্রয়ে শ্বেত এরূপ শজারুর কাঁটার দ্বারা ক্ষুদ্র ক্ষুদ্র কেশগুলি গুছাইয়াদিবে। তাহার পরে ঘৃতসংবরা দেওআ অগ্নিপক্ব তিলতণ্ডুল তাহাকে দেখাইবে এবং তদ্দর্শনকালে তাহাকে পতি জিজ্ঞাসা করিবে 'উহাতে কি দেখিতেছ?' এতদুত্তরে বধূ বলিবে 'প্রজা ইত্যাদি ( ম০ ব্রা০ ১,৫,৫ )'। পরে সে দিবস তাহাই বধূ ভোজন করিবে এবং সেই

ভোজনকালে ব্রাহ্মণীগণ এই বধূ 'বীরপ্রসবিনী হউক' ইত্যাদি মঙ্গলসূচক বাক্যে ঈশ্বরোপাসনা করিবে। ইহাই সীমন্তোন্নয়ন ॥ ৩—১২

## অথ সোষ্যন্তীহোমঃ ॥ १३

'অথ' प्रकरणान्तरं द्योतयति। 'सोष्यन्तीहोमः' एतन्नामक स्वापरः संस्कारः कार्यः। १३

এই সীমন্তোন্নয়ন সংস্কারের পরে সোষ্যন্তীহোম নামে আর একটি সংস্কার করিতে হয়। ১৩

तस्य कालं विधत्ते ;—

## प्रतिष्ठिते वस्तौ ॥ १४

'वस्तौ' योनिप्रदेशे 'प्रतिष्ठिते' गर्भे समुपस्थिते सोष्यन्तीहोमः कार्यः इति तत्कालनिर्देशः। १४

যখন প্রসবদ্বারদেশে গর্ভ আসিয়া উপস্থিত হইবে সেই সময়ে অর্থাৎ প্রসবের অব্যবহিত পূর্ব্বে এই সোষ্যন্তী হোম সংস্কার করিতে হইবে। ১৪

तदेतिकर्त्तव्यतां विधत्ते ;—

**परिस्तीर्य्याग्निमाज्याहुती जुहोति या तिरश्चीत्येयस्त्वां विपश्चित्पुच्छमभरदिति च पुमानयं जनिष्यतेऽसौ नामेति नामधेयं गृह्णाति यत्तद् गुह्यमेव भवति ॥ १५—१७**

'अग्निम् परिस्तीर्य' तत्र, 'या तिरश्ची ( म० ब्रा० १,५,६ )' —'इत्येतयर्चा', 'विपश्चित्पुच्छमभरत् ( म० ब्रा० १,५,७ )'— 'इति' अनया च 'आज्याहुती' आज्यतन्त्रेण आहुतिद्वयम् 'जुहोति' जुहुयात् ( १५ )। अपरञ्च 'अयं' गर्भः 'पुमान् जनिष्यते' चेत् 'असौ नाम'—'इति' 'नामधेयं' जनिष्यमाण-पुत्राख्यां 'गृह्णाति' प्रकल्प्य रचति ( १६ )। 'यत्' नामधेयं मनसि निश्चितम्, 'तत्' नामधेयं 'गुह्यम्' गोप्यमेव 'भवति' भवेद्, अन्यथा कन्याजाते ह्रासाय स्याच्छत्रूणामिति ( १७ )। गतोऽयं सोष्यन्तीहोमसंस्कारः। १५—१७

পূর্ব্ব উপদেশানুসারে অগ্নি স্থাপনাদি পরিস্তরণান্ত কার্য্যের পরে 'যা তিরশ্চী ( মং ব্রাং ১,৫,৬ )' মন্ত্রে এবং 'বিপশ্চিৎপুচ্ছমভরৎ ( ১,৫,৭ )' মন্ত্রে আজ্যতন্ত্রে আহুতি-দ্বয় প্রদান করিবে ( ১৫ )। এই সময়ে,—'যদি পুত্র জন্মে ত তাহার এই নাম রাখিব' এইরূপ মনে মনে একটি নাম স্থির করিয়া রাখিবে অর্থাৎ পুত্রের আশা করিবে ( ১৬ ) পরং তাহা প্রকাশ করিবে না অর্থাৎ প্রকাশ করিলে যদি পুত্র না হয়'ত শত্রু-হাস্য হইতে পারে ( ১৭ )। ইহাই সোষ্যন্তী-হোম সংস্কার। ১৫—১৭

अथ जातकर्मोच्यते ;—

**यदाऽस्मै कुमारं जातमाचक्षीरन्नथ ब्रूयात् काङ्-क्षत नाभिकृन्तनेन स्तनप्रतिधानेन चेति ॥ १८**

'यदा' यस्मिन् काले प्रसवगृहस्थाः धात्रीप्रभृतयः सर्वे 'कुमारं जातम्'—'इति' समाचारम् 'अस्मै' पित्रे 'आचक्षीरन्'

'अथ' तदृव्यहितमेव पिता 'ब्रूयात्'—'नाभिकृन्तनेन' नाभि-लग्ननाडीच्छेदनेन 'च' अपि स्तनप्रतिधानेन' स्तनपायनेन एवं पालयितुं 'काङ्क्षत' इच्छां कुरुत यूयम् 'इति'। १८

অতঃপর জাতকর্ম্ম সংস্কার যথা ;—যখনই সূতিকাগৃহস্থ-ধাত্রী প্রভৃতি বলিয়া উঠিবে যে 'কুমার জন্মগ্রহণ করিল' তখনই পিতা বলিবে 'নাভিসংলগ্ন নাড়ীচ্ছেদন ও স্তন্যপ্রদা-নাদির দ্বারা রক্ষা করিতে ইচ্ছা কর'। ১৮

व्रीहियवौ पेषयेत्तयैवाऽऽवृता यया शुङ्गान्द-क्षिणस्य पाणेरङ्गुष्ठेनोपष्ठिकया चाङ्गुल्याभिसङ्गृह्य कुमारस्य जिह्वायां निर्माष्टीयमाज्ञेति तथैव मेधा-जननꣳ सर्पिः प्राशयेज्जातरूपेण वाऽऽदाय कुमारस्य मुखे जुहोति मेधान्ते मित्रावरुणावित्येतयर्चा सद-सस्पतिमद्भुतमिति च कृन्तत नाभिमिति ब्रूयात् —स्तनस्य प्रतिधत्तेति ॥ १९—२२

नाभिकृन्तनात् पूर्वकृत्यमाह ;—'यया' पूर्वोक्तया 'आवृता' परिपाट्या 'शुङ्गां' पूर्वोक्तां 'पेषयेत्' 'तयैव' व्रीहियवौ पेषयेत् (१९)। पिष्टौ च व्रीहियवौ 'दक्षिणस्य' पाणेः अङ्गुष्ठेनोप-कनिष्ठिकया च अङ्गुल्या अभि सङ्गृह्य' 'इयमाज्ञा (म० ब्रा० १,५,८)'—'इति' इमं मन्त्रमुच्चरन् 'कुमारस्य' तस्य 'जिह्वायां' 'निर्माष्टि' नियच्छति (२०)। 'तथैव' तेनैव प्रकारेण दक्षि-णस्य पाणेः अङ्गुष्ठानामिकाभ्यां गृहीत्वेति यावत्. 'मेधान्ते

মিত্রাবরুণৌ ( ম০ ব্রা০ ১,৫,৮ )'—'ইত্যেতয়র্চা' 'চ' অপি 'সদসস্পতিমদ্ভুতম্ ( ছ০ আ০ ২,২,৩,৩ )'—'ইতি' অনয়া 'মেধাজননং সর্পিঃ' 'প্রাশয়েৎ'। 'বা' অথবা 'জাতরূপেণ' 'হিরণ্যেন' হিরণ্ময়শলাকাদিনা 'আদায়' গৃহীত্বা সর্পিঃ 'কুমারস্য' তস্য 'মুখে' 'জুহোতি' জুহুয়াৎ ক্ষিপেৎ ( ২১ )। এতদনন্তরম্ 'নাভিম্ কৃন্তত'—'ইতি', 'স্তনং প্রতিধত্ত'—'ইতি চ' 'ব্রূয়াৎ' আদিশ্যাৎ পিতেতি শেষঃ। পিত্রাদেশগ্রহণ-পূর্ব্বকমেব নাভিকৃন্তনং স্তনপ্রতিধানঞ্চেতি গতং জাতকর্ম্ম (২২)।
১৮—২২

পূর্ব্বে শুঙ্গা পেষণের যে নিয়ম বলা হইয়াছে, সেই-রূপেই ধান্য-তণ্ডুল ও যব-তণ্ডুল পেষণ করিয়া নাড়ীচ্ছেদনের পূর্ব্বেই দক্ষিণহস্তের অনামিকা ও অঙ্গুষ্ঠের দ্বারা গ্রহণ করত 'এই ঈশ্বরের আজ্ঞা ( মং ব্রাং ১,৫,৮ )' মন্ত্রপাঠপূর্ব্বক সেই নবকুমারের জিহ্বাতে লেহন করাইবে এবং মেধার বৃদ্ধি কাম-নাতে 'মেধান্তে মিত্রাবরুণৌ ( মং ব্রাং ১,৫,৯ )' মন্ত্র ও 'সদসস্পতিমদ্ভুতম্ ( ছং আং ২,২৩,৭ ) মন্ত্র ; এই মন্ত্রদ্বয় পাঠপূর্ব্বক বারদ্বয় সেইরূপ অঙ্গুষ্ঠানামিকার দ্বারাই ঘৃত ও অবলেহন করাইবে অথবা সুবর্ণশলাকাদির অগ্রে ঘৃত লইয়া সেই কুমারের মুখে প্রদান করিবে। অনন্তর নাড়ী ছেদন করিয়া স্তনপান করাইবে। ইহাই জাতকর্ম্ম সংস্কার। ১৯—২২

**অত ঊর্দ্ধমসমালম্ভনমাদশরাত্রাৎ ॥ ২৩,৩**

'অত ঊর্দ্ধম্' নাভিকৃন্তনাৎ পরস্তাৎ 'আ দশরাত্রাৎ' দশ-

रामिशौषं यावत् 'असमालम्भनम्' अस्पर्शनम् कुमारमातुरित्य-शौचविधिः ॥ २३

इति सामवेदीये गोभिलगृह्यसूत्रे द्वितीयप्रपाठके सप्तमखण्डस्य व्याख्यानं सामश्रमिकृतं समाप्तम् । २,७

এই নাড়িচ্ছেদনের পর হইতে দশ দিন সেই প্রসূতি অস্পৃশ্যা হইবে অর্থাৎ এ দশ দিন ভর্ত্তা স্বীয় পত্নীকে স্পর্শ পর্য্যন্তও করিবে না। ২৩

দ্বিতীয় অধ্যায়ের সপ্তম খণ্ডের অনুবাদ সমাপ্ত ॥ ২,৭

अथ निष्क्रामणकार्यस्यादौ ज्यौत्स्नोपस्थानं विधत्ते;—

অথ নিষ্ক্রামণ। তন্মধ্যে প্রথমত জ্যোৎস্নোপস্থান;—

•जननाद्यस्तृतीयोज्यौत्स्नस्तस्य तृतीयायां प्रातः सशिरस्कं कुमारमाप्लाव्यास्तमिते वीते लोहितिम्न्य-ञ्जलिकृतः पितोपतिष्ठतेऽथ माता शुचिना वसनेन कुमारमाच्छाद्य दक्षिणत उदञ्चं पित्रे प्रयच्छत्युदक्-शिरसमनुपृष्ठम्परिक्रम्योत्तरतोऽवतिष्ठतेऽथ जपति यत्ते सुसीमइति यथाऽयन्नप्रमीयेतपुत्रो जनित्र्या अधीत्यु-दञ्चं मात्रे प्रदाय यथार्थम् ॥ १—५

•'जननात्' जन्मतः •आरभ्य "यः' 'तृतीयः' 'ज्यौत्स्नः'

ज्योत्स्नायुक्तः पक्षः, 'तस्य' पक्षस्य 'तृतीयायां' तिथौ 'प्रातः' 'कुमारं' 'सशिरस्कम् आप्लाव्य' शिरसि जलदानेन स्नापयित्वा 'अस्तमिते' सूर्ये, 'वीने' विगते च 'लोहितिम्नि', 'पिता' कुमारजनकः 'अञ्जलिकृतः' पुत्रग्रहणाय प्रसारिताञ्जलिद्वयः सन् 'उपतिष्ठते' उत्थितस्तिष्ठेत (१)। 'अथ' तदनन्तरं 'माता' कुमारप्रसूतिः 'शुचिना' शुभ्रेण निर्मलेनेति यावत् 'वसनेन' 'कुमारम्' 'आच्छाद्य' 'दक्षिणतः' दक्षिणस्यां दिशि गत्वा 'उदञ्चं' उत्तानम् 'उदक्शिरसं' कुमारं 'पित्रे' कुमार-जनकाय तस्मै 'प्रयच्छति' प्रयच्छेत् (२)। दत्त्वा च सा 'अनुपृष्ठं परिक्रम्य' स्वपतिपृष्ठदेशेनागत्य 'उत्तरतः' उत्तरस्यां सुतरां पत्युर्वामभागे 'अवतिष्ठते' अवस्थिता भवेत् (३)। 'अथ' दम्पत्योर्यथोक्तभावेन सकुमारावस्थानानन्तरं पतिः 'यत्ते सुसीम'—'इति'मारभ्य 'यथाऽयन्न प्रमीयेत पुत्रो जनित्र्या अधि'-इत्यन्तं त्र्चं (म॰ ब्रा॰ १,५,१०—१२) 'जपति' जपेत् (४)। जपित्वा च 'उदञ्चं' उत्तानमेव तं कुमारं मात्रे तत्प्रसूत्यै 'प्रदाय' प्रदानं कृत्वा समाप्तं ज्योत्स्नोपस्थानमिति मत्वा 'यथार्थम्' यथाप्रयोजनं विहरेदिति (५)। २—५

জন্ম হইতে তৃতীয় জ্যোৎস্নাপক্ষের তৃতীয়া তিথিতে প্রাতঃকালে নবকুমারের মস্তক পর্য্যন্ত আপ্লুত করিয়া স্নান করাইবে অনন্তর সূর্য্যাস্তপরে,এমনকি সূর্য্যমণ্ডলের অরুণিমা-পর্য্যন্ত দৃষ্টিপথাতীত হইলে, সেই নবকুমারের পিতা, পুত্র গ্রহণের জন্য অঞ্জলিদ্বয় প্রসারিত করত দণ্ডায়মান হইবে। অনন্তর নবকুমারের মাতা সেই কুমারকে পরিষ্কৃত বস্ত্রে আচ্ছাদিত করিয়া স্বীয় স্বামীর দক্ষিণদিকে আসিয়া ঐ বালক

কে উত্তরশিরা ও উত্তানভাবে তাঁহার অঞ্জলিতে প্রদান করিয়া স্বয়ং স্বামীর পৃষ্ঠপথে বামদিকে আসিয়া যুগ্মরূপে অবস্থিত হইবে। পরে ঐ বালক সহ পিতা 'যন্তেসুসীম' হইতে 'যথা অয়ং ন প্রমীয়েত পুত্রোজনিত্র্যা অধি' পর্য্যন্ত (ম° ব্রা° ১,৫,১০—১২) ঋক্‌ত্রয় পাঠ করিবে। অনন্তর গৃহীত পুত্রটি তদীয় জননিকে পুনঃপ্রদান করিয়া যথাপ্রয়োজন অপরকার্য্য বা বিশ্রাম করিবে। ১—৫

**निष्क्रामणान्तरहलमवुत्सर्जनं विधत्ते ;—**

দ্বিতীয়ত অবুৎসর্জন ;—

**अथ येऽत ऊर्द्ध्वं ज्यौत्स्नाः प्रथमोद्दिष्टएव तेषु पितोपतिष्ठतेऽपामञ्जलिं पूरयित्वाऽभिमुखश्चन्द्रमसं यददश्चन्द्रमसीति सकृद्यजुषा द्विस्तूष्णीमुत्सृज्य यथार्थम् ॥ ६,७**

'अथ' प्रकरणान्तरं द्योतयति। 'अतः' जननात् तृतीयज्यौत्स्नात: 'ऊर्द्ध्वं' उपरिष्टात् परस्तादिति यावत्, 'ये' 'ज्यौत्स्नाः' ज्योत्स्नायुक्ताः कालाः शुक्लपक्षाः, 'तेषु' ज्यौत्स्नेषु कालेषु 'प्रथमोद्दिष्टे' प्रथमागते ज्यौत्स्ने जननाच्चतुर्थे शुक्लपक्षे, यस्यां कस्यामप्येकस्यां तिथौ सम्भवतश्चन्द्रोदये 'पिता' कुमारजनकः, 'अपामञ्जलिं पूरयित्वा' 'चन्द्रमसम् अभिमुखः' सन् 'उपतिष्ठते' उपतिष्ठेत उत्थितस्तिष्ठेत (६)। ततश्च 'यददश्चन्द्रमसि (म° ब्रा° १,५,१२)'—'इति' अनेन 'यजुषा' छन्दःशून्यमन्त्रेण 'सकृत्', 'तूष्णीं' अमन्त्रकं 'द्विः' द्विवारम्

'তন্মৃজ্য' গৃহীতোদকাঞ্জলিমিতি যাবৎ; সমাপ্ত মব্‌সর্জন কৃত্য মিতি মত্বা 'যথার্থং' যথাপ্রয়োজনং বিহরেদিতি শেষ: ॥ ৬,৭

বর্ণিত ঐ তৃতীয় জ্যোৎস্নের পরে যে প্রথমোপস্থিত জ্যোৎস্ন অর্থাৎ জন্ম হইতে চতুর্থ জ্যোৎস্নাপক্ষ, তাহার প্রতিপৎ হইতে পূর্ণিমাপর্য্যন্ত পঞ্চদশ রাত্রির যে কোন রাত্রে সম্ভবত চন্দ্রোদয়ে, কুমারের পিতা দণ্ডায়মান হইয়া চন্দ্রাভি-মুখ হওত 'যদদশ্চন্দ্রমসি (ম০ ব্রা০ ১,৫,১৩)' মন্ত্রপাঠ করত একবার এবং অপর বারদ্বয় তূষ্ণীক, সাকল্যে অঞ্জলিত্রয় জল ত্যাগ করিবে। ৬,৭

অথ নামধেয়ং বিধত্তে;—

অথ নামধেয় করণ;—

**জননাদ্দশরাত্রে ব্যুষ্টে শতরাত্রে সংবৎসরে বা নামধেয়করণম্ ॥ ৮**

'জননাৎ' জননদিনমারভ্য 'দশরাত্রে শতরাত্রে সংবৎসরে বা' 'ব্যুষ্টে' অতীতে একাদশাদিনাদৌ 'নামধেয়করণম্' কুমারস্যেতি। ৮

জন্মদিবস হইতে দশদিবস বা শতদিবস অথবা সংবৎসর গত হইলে একাদশাদি দিবসে নবকুমারের নামধেয়করণ হইবে। ৮

তত্রেতিকর্ত্তব্যতাং বিধত্তে;—

নামধেয়করণ যেরূপে সম্পাদিত হইবে, তাহাই বলিতেছেন;—

**অথ যস্তৎ করিষ্যন্ ভবতি পশ্চাদগ্নেরুদগগ্রেষু**

दर्भेषु प्राङुपविशत्यथ माता शुचिना वसनेन कुमार-माच्छाद्य दक्षिणतउदश्चं कर्त्रे प्रयच्छत्युदक्शिरसम-नुपृष्ठं परिक्रम्योत्तरतउपविशत्युदगग्रेष्वेव दर्भेष्वथ जुहोति प्रजापतये तिथये नक्षत्राय देवतायाइति तस्य मुख्यान् प्राणानभिमृशन् कोऽसि कतमोऽसी-त्येतं मन्त्रं जपत्याहस्पत्यं मासं प्रविशासावित्यन्ते च मन्त्रस्य घोषवदाद्यन्तरन्तस्थन्दीर्घाभिनिष्ठानान्तं कृतन्नाम दध्यादेतदतद्धितमयुग्दान्तंस्त्रीणाम्मावे चैव प्रथमं नामधेयमाख्याय यथार्थं र्द्वौर्दक्षिणा ॥

९—१८

'अथ' प्रक्रमार्थः। 'यः' पुरुषः पिता पुरोहितोवा 'तत्' नामधेयं कर्म 'करिष्यन् भवति', सः 'अग्नेः पश्चात्' 'उदगग्रेषु दर्भेषु' 'प्राङ्' प्राङ्मुखः सन् 'उपविशति' उपविशेत् (९)। 'अथ' तदनन्तरं 'माता' 'दक्षिणतः' दक्षिणस्यां कर्तुर्दक्षिणभागे गत्वा 'शुचिना वसनेन कुमारम् आच्छाद्य' 'उदक्शिरसम्' उत्तर-शिरस्कम् किञ्च 'उदञ्चम्' उत्तानं शिशुं 'कर्त्रे' नामधेयकर्मणो-ऽनुष्ठात्रे प्रयच्छति (१०)। दत्त्वा च 'अनुपृष्ठं परिक्रम्य' सा 'उत्तराग्रेषु दर्भेषु' 'उत्तरतः' उत्तरस्यां दिशि कर्तुर्वामभागे 'उप-विशति' उपविष्टा भवेत् (११)। 'अथ' तदनन्तरं, क्रोडी-कृतकुमारः सः 'प्रजापतये' प्रजापतिदेवतामनुकूलयितुं तथैव 'तिथये', तथैव 'नक्षत्राय', 'जुहोति' हवनं कुर्यात् (१२)।

एवं होमानन्तरं 'तस्य' कुमारस्य 'मुख्यान् प्राणान्' मुखगत-श्वासान् 'सम्मृशन्' अङ्गुलीभिः स्पृशन् 'कोऽसि कतमोऽसि (म० ब्रा० १,५.१४—१७)'—'इत्येतं मन्त्रं' 'जपति' जपेत् (१३)। 'मन्त्रस्य' तस्य 'आहस्पत्यं मासं प्रविशासौ'—'इति' अत्र 'च' अपि 'अन्ते' चरमे असौ इत्यस्य स्थाने 'कृतं' नवरचितं 'नाम' आह्वानाद्यर्थव्यवहार्यं पदं 'दध्यात्' स्थापयेत् व्यवहर्य्यादिति। तत्र नाम 'घोषवदाद्यम्' आदितएव घोषसंज्ञकाक्षरयुक्तम्, 'अन्तरन्तस्थं' अन्तस्थसंज्ञकाक्षरमध्यं, 'दीर्घाभिनिष्ठानान्तं' दीर्घसंज्ञकाभिनिष्ठानसंज्ञकाक्षरयोरन्यतरावसानकं भवेत् (१४)। 'एतत्' नाम 'अतद्धितं' तद्धितप्रत्ययरहितमेव कार्यम् (१५)। 'स्त्रीणाम्' कन्यानां तु 'अयुग्दान्तम्' अयुग्माक्षरान्तं दान्तव्यतिरिक्तञ्च नाम दध्यादित्येव तत्र विचार्यम् (१६)। 'च' पुनः तत् 'नामधेयं' 'मात्रे एव' प्रथमं 'आख्याय' परिज्ञाप्य नामधेयकरणं समाप्तमिति मत्वा 'यथार्थम्' यथाप्रयोजनं विहरेदिति (१७)। अस्य कर्मणः 'गौः' एका 'दक्षिणा' देयेति (१८)। समाप्तं नामधेयकरणम्। ८—१८

এই নামধেয় কার্য্যটি যে করিবে সে অর্থাৎ পিতা বা পুরোহিত, অগ্নির পশ্চিমদিকে উত্তরাগ্র পাতিত কুশাসনে পূর্ব্বাভিমুখ হইয়া উপবিষ্ট হইবে। কুমারের প্রসূতি পরিষ্কৃত বস্ত্রে শিশু আচ্ছাদিত করিয়া লইয়া সেই নামধেয় করিতে প্রবৃত্ত কুমারের পিতার বা অপর ব্রাহ্মণের দক্ষিণে আসিয়া উত্তরশিরা ও উত্তানভাবে তাহাকে প্রদান করিয়া সেই নামধেয় করিতে প্রবৃত্ত পিতা বা ব্রাহ্মণের পৃষ্ঠদেশ

পথে বামে আসিয়া কুশাপুঞ্জের উপরি উপবিষ্টা হইবে। অনন্তর ঐ নামধেয়কারী কুমারকে ক্রোড়ে লইয়া প্রথমে প্রজাপতি দেবতার তুষ্টির জন্য হোম করিবে, পরে যে তিথিতে কুমারের জন্ম হইয়াছে সেই তিথির উল্লেখপূর্ব্বক দ্বিতীয়াহুতি প্রদান করিবে, তৎপরে যে নক্ষত্রে কুমারের জন্ম হইয়াছে তাহার উল্লেখপূর্ব্বক তৃতীয় আহুতি প্রদান করিবে। পরে সেই বালকের মুখে হস্তদানপূর্ব্বক শ্বাস স্পর্শ করত 'কোসিকতমোসি (ম০ ব্রা০ ১,৫,১৪)' মন্ত্রটি পাঠ করিবে এবং ঐ মন্ত্রের পাঠকালে স্থানদ্বয়ে স্থিত অসৌপদের পরিবর্ত্তে নূতন নাম নিবিষ্ট করিয়া ব্যবহার করিবে। ঐ নামটির আদ্যাক্ষর ঘোষ বর্ণ হইবে, মধ্যে অন্তস্থবর্ণ থাকিবে, অন্তবর্ণ দীর্ঘ বা বিসর্গ হইবে। বিশেষত এ নামটিতে তদ্ধিত থাকিবে না। কন্যাসন্তানের নামটি যুগ্মাক্ষরান্ত ও দকারান্ত না হয় এইমাত্র লক্ষণীয়। এইরূপ নাম উক্ত মন্ত্রের স্থানদ্বয়ে 'অসৌ' পদের পরিবর্ত্তে নিবিষ্ট করত পাঠ সমাপ্ত হইলে সেই নামটি সর্ব্বপ্রথমে তদীয় প্রসূতিকে অবগত করাইবে। এইরূপে নামধেয়করণ শেষ করিয়া পিতা বা পুরোহিত যথাপ্রয়োজন অপরাপর কার্য্য বা বিশ্রাম করিবে। নামধেয়করণের দক্ষিণা একটী গাভী। ৯—১৮

**পৌষ্টিকং কর্ম বিধত্তে ;—**

অথ পৌষ্টিক কর্ম্ম ;—

**কুমারস্য মাসিমাসি সংবৎসরে সাংবৎসরিকেষু**

वा पर्वस्वग्नीन्द्रौ द्यावापृथिवी विश्वान्देवा१ंश्च यजेत दैवतमिष्ट्वा तिथिं नक्षत्रञ्च यजेत ॥ १९—२०

'कुमारस्य' नवजातस्य 'संवत्सरे' प्रथमे 'मासि मासि' प्रति जन्मतिथौ, 'वा' अथवा 'सांवत्सरिके' जन्मतिथावेव प्रथमे एव च, अथवा 'पर्वसु' पौर्णमास्यामावास्यासु प्रथमे संवत्सरे एव 'अग्नीन्द्रौ', 'द्यावापृथिवी', 'च' अपि 'विश्वान् देवान्' 'यजेत' यागेनेष्टं भावयेत् ( १९ ) 'दैवतमिष्ट्वा' अग्नीन्द्रादियागं प्रकृत्य 'तिथिं' जन्मनः 'च' अपि 'नक्षत्र'' जन्मन एव 'यजेत' ( २० )। गतमिदं पौष्टिकं कर्म जन्मतिथिकृत्यं वा। १९,२०

প্রথম বৎসর প্রতিমাসের জন্মতিথিতে অথবা সংবৎসরের শেষ জন্মতিথিতে কিংবা প্রতি পূর্ণিমা ও অমাবাশ্যা পর্ব্বে অগ্নীন্দ্র, দ্যাবাপৃথিবী ও বিশ্বেদেবা দেবতার অর্চ্চনা করিবে এবং এইরূপে দেবতার্চ্চনের পরে তিথি ও নক্ষত্রেরও অর্চ্চনা করিবে। ইহাই জন্মতিথিকৃত্য। ১৯,২০

अथ मूर्द्धाभिघ्राणम् ;—

অথ মূর্দ্ধাঘ্রাণ কর্ম্ম ;—

विप्रोष्य ज्येष्ठस्य पुत्रस्योभाभ्यां पाणिभ्यां मूर्द्धानं परिगृह्य जपेद् यदा वा पिता मद्गति विद्यादुपेतस्य वाङ्गादङ्गात् सम्भवसीति पशूनां त्वा हिङ्कारेणाभिजिघ्रामीत्यभिजिघ्र् यथार्थमेवमेवावरेषां यथाज्येष्ठं यथोपलम्भं वा स्त्रियास्तूष्णीं मूर्द्धन्यभिजिघ्रणं मूर्द्धन्यभिजिघ्रणम् ॥ २१—२५ ॥ ८

'विप्रोष्य' प्रवासादागत्य, 'वा' अथवा 'यदा' यस्मिन् काले 'मे पिता इति विद्यात्' बालकः तदैव, 'वा' अथवा 'उपेतस्य' सन्निहितस्य यदैव सन्निहितो भवेत् तदैव, 'ज्येष्ठस्य पुत्रस्य मूर्द्धानं पाणिभ्यां परिगृह्य' 'अङ्गादङ्गात् संभवसि (१,५,१६—१८)'—'इति' त्रृचं 'जपेत्' (२१), ततः 'पशूनां त्वा (१,५,१९)'—'इति' इमं मन्त्रं पठन् 'अभिजिघ्रेत्' आघ्राय समाप्तं मूर्द्धाघ्राणं कर्मेति मत्वा 'यथार्थम्' यथाप्रयोजनं विहरेत् (२२)। 'अवरेषां' तत्कनिष्ठानामपि पुत्राणाम् 'एवमेव' मूर्द्धाघ्राणं कर्त्तव्यम् (२३)। तत्र च 'यथाज्येष्ठं' ज्येष्ठानुक्रमेणैव मूर्द्धाघ्राणं कार्यम्। 'वा' अथवा 'यथोपलम्भं' येन क्रमेण पितृसन्निधौ ते उपस्थितास्तेनैव क्रमेणेति (२४)। 'स्त्रियाः' कन्यायाः 'मूर्द्धनि' मस्तके 'अभिजिघ्रणं' आघ्राणग्रहणं 'तूष्णीम्' अमन्त्रकमेव कार्यम् (२५)। समाप्तं मूर्द्धाघ्राणम्। द्विवर्षं जुहुवामप्रकरणसमाप्तिद्योतकम्॥ २१—२५॥ ८

इति सामवेदीये गोभिलगृह्यसूत्रे द्वितीयप्रपाठके अष्टमखण्डस्य व्याख्यानं सामश्रमिकृतं समाप्तम्॥ २,८

পিতা, যখন প্রবাস হইতে নিজ নিকেতনে আসিবেন তখন, অথবা পুত্র যখন "আমার পিতা এই" বলিয়া অবগত হইতে পারিবে তখন, কিংবা যখনই নিকটে আসিয়া উপস্থিত হইবে তখনই, 'অঙ্গাদঙ্গাৎসংভবসি (১,৫, ১৬—১৮)' মন্ত্রত্রয় পাঠপূর্ব্বক হস্তদ্বয় দ্বারা জ্যেষ্ঠপুত্রের মস্তক গ্রহণ করিয়া 'পশূনাং ত্বা (মং ব্রা০ ১,৫,১৯)' মন্ত্রপাঠ করত আঘ্রাণ করিবে; পরে যথেচ্ছবিচরণাদি করিবে। অপর পুত্রা-

দির মস্তকাঘ্রাণও এইরূপেই করিতে হইবে। যে যাহার পরে উৎপন্ন, তাহাকে তাহার পরে অথবা যে যখন নিকটে আসিবে, তদনুসারেই মূর্দ্ধাঘ্রাণ করিবে। কন্যার মূর্দ্ধাঘ্রাণে মন্ত্রপাঠ করিবে না। ২১—২৫ ॥ ৮

দ্বিতীয় অধ্যায়ের অষ্টম খণ্ডের অনুবাদ সমাপ্ত ॥ ২,৮

---

**অথ চূড়াকরণসংস্কারোঽভিধীয়তে ;—**

চূড়াকরণ নামক আর একটি সংস্কার বলা হইতেছে। ইহা পুত্র ও কন্যা উভয়রূপ সন্তানেরই হইয়াথাকে। যথা—

**অথাতস্তৃতীয়ে বর্ষে চূড়াকরণম্ ॥ ১**

**'অথ' প্রকরণান্তরতাং দ্যোতয়তি। 'অতঃ' আরভ্য 'চূড়াকরণং' কর্ম্ম বক্ষ্যামীতি। তচ্চ 'তৃতীয়ে বর্ষে' কার্য্যমিতি চূড়াকরণকালঃ। ১**

এই চূড়াকরণ কার্য্য, বালক বা বালিকার তৃতীয় বর্ষ বয়সে হইবে। ১

**তস্যেতিকর্ত্তব্যতাং বিধত্তে ;—**

কিরূপে করিতে হয়, তাহাই সবিশেষ বলা হইতেছে ;—

**পুরস্তাচ্ছালায়া উপলিপ্তেঽগ্নিরুপসমাহিতো ভবতি তত্রৈতান্যুপকৢপ্তানি ভবন্ত্যেকবিংশতির্দর্ভপিঞ্জূল্য উষ্ণোদককংস ঔদুম্বরঃ ক্ষুর আদর্শো বা ক্ষুরপাণি র্নাপিত ইতি দক্ষিণত আনডুহো গোময়ঃ কৃসরঃ**

स्थालीपाको वृथापक्व इत्युत्तरतो व्रीहियवैस्तिलमाषै-रिति पृथक् पात्राणि पूरयित्वा पुरस्तादुपनिदध्युः कृसरो नापिताय सर्वबीजानि चेति ॥ २—७

'शालायाः' 'पुरस्तात्' पूर्वस्मिन् भागे 'उपलिप्ते' स्थाने 'अग्निः उपसमाहितः भवति' (२)। 'तत्र' 'एतानि' अनुपदं वक्ष्यमाणानि 'उपक्लृप्तानि' आसाद्य सज्जितानि 'भवन्ति' (३)। तान्येवाह—'एकविंशतिः दर्भपिञ्जूल्यः'; 'उष्णोदककंसः' उष्णोदकसहितकांस्यपात्रम्, 'औदुम्बरः' उदुम्बरकाष्ठनिर्म्मितः 'क्षुरः' 'वा' अथवा 'आदर्शः' दर्पणः, 'क्षुरपाणिर्नापितः'—'इति' चत्वारि वस्तूनि सम्पाद्य 'दक्षिणतः' दक्षिणस्यां अग्नेः स्थाप्यानीति (४)। किञ्च 'आनडुहः गोमयः' वृथापक्वः' अमन्त्रपक्वः 'कृसरः स्थालीपाकः' 'इति' द्वे वस्तुनि सम्पाद्य 'उत्तरतः' उत्तरस्यां अग्नेरेव सर्वत्र पूर्वाभिमुखएव कर्त्ता सुतरां कर्त्तुर्वामभागे (५)। 'व्रीहियवैः' मिश्रितैः 'तिलमाषैः' मिश्रितैरेव 'पृथक्' 'पात्राणि' 'पूरयित्वा' 'पुरस्तात्' अग्नेरेव पूर्वस्यां परस्तादिति यावत्, 'उपनिदधुः' स्थापयेयुः (६)। एषु च उक्तः 'कृसरः' 'च' अपि 'सर्वबीजानि' व्रीहियवैस्तिलमाषैश्च पूरितपात्राणि 'नापिताय' तस्मै देयानि (७)। २—७

যেস্থানে চূড়াকার্য্য সমাধা করিতে হইবে, তাহা গোময়ের দ্বারা লিম্পন করিয়া পূর্ব্ব ভাগে যথাবিধি অগ্নি স্থাপন করিবে (২)। এইগুলি সংগ্রহ করিয়া সেইস্থানে উপস্থিত করিবে (৩)। যথা,—একবিংশতি দর্ভপিঞ্জূলী, উষ্ণোদকপূর্ণ কাংস্যপাত্র, ডুমুরকাষ্ঠের ক্ষুর অথবা দর্পণ এবং লৌহ-

ক্ষুর সহিত নাপিত ; এই চারি বস্তু দক্ষিণদিকে উপস্থিত রাখিবে ( ৪ )। ষাঁড়ের গোবর, অসমন্ত্রপক্ক কৃসর অর্থাৎ সিদ্ধ-তিলতণ্ডুল ; এই বস্তুদ্বয় উত্তরদিকে রাখিবে ( ৫ )। পূর্ব্ব-দিকে একপাত্রে ধান্য ও যব এবং অপরপাত্রে তিল ও মাষ রাখিবে ( ৬ )। ঐ কৃসর ও ধান্যাদিপূর্ণ পাত্রদ্বয় নাপিত পাইবে ( ৭ )। ২—৭

**অথ মাতা শুচিনা বসনেন কুমারমাচ্ছাদ্য পশ্চাদগ্নেরুদগগ্রেষু দর্ভেষু প্রাচ্যুপবিশতি ॥ ৮**

'অথ' তদনন্তরম্। 'মাতা' বালকস্য, 'শুচিনা বসনেন কুমারম্ আচ্ছাদ্য,অগ্নেঃ পশ্চাৎ উদগগ্রেষু দর্ভেষু' 'প্রাচী' প্রাঙ্মুখী সতী 'উপবিশতি'। ৮

তদনন্তর, বালকের মাতা বালককে পরিষ্কৃত বস্ত্রে আবৃত করিয়া অগ্নির পশ্চাৎ উত্তরাগ্রপাতিত কুশাসমূহে প্রাঙ্মুখী হইয়া উপবিষ্টা হইবে। ৮

**অথ যস্তৎকরিষ্যন্ ভবতি পশ্চাৎ প্রাঙবতিষ্ঠতে ॥ ৯**

'অথ' তদনন্তরম্। 'যঃ' পুরুষঃ 'তৎ' চূড়াকরণং নাম সংস্কারকার্যং 'করিষ্যন্ ভবতি' পিতা পুরোহিতোবা, সঃ 'পশ্চাৎ' উপবিষ্টায়াঃ সপুত্রায়াঃ, 'প্রাক্' প্রাঙ্মুখঃ সন্ 'অবতিষ্ঠতে' অবস্থানং কুর্যাৎ। ৯

পরে, পিতা বা পুরোহিত যে কেহ চূড়াসংস্কার করিতে প্রবৃত্ত হইয়াছে, সে ব্যক্তি তাহারও পশ্চাৎ পূর্ব্বাভিমুখ হইয়াই অবস্থিতি করিবে। ৯

अथ जपत्यायमगात् सविता क्षुरेणेति सवितारं मनसा ध्यायन् नापितं प्रेक्षमाण उष्णेन वाय उदकेनेधीति वायुं मनसा ध्यायन्नुष्णोदककंसं प्रेक्षमाणो दक्षिणेन पाणिनाऽप आदाय दक्षिणां कपुष्णिकामुन्दत्याप उन्दन्तु जीवस इति विष्णोर्दंष्ट्रोऽसीत्यौदुम्बरं क्षुरं प्रेक्षत आदर्शं वौषधे त्रायस्वैनमिति सप्त दर्भपिञ्जूलीर्दक्षिणायां कपुष्णिकायामभि शिरोग्रा निदधाति ता वामेन पाणिना निगृह्य दक्षिणेन पाणिनौदुम्बरं क्षुरं गृहीत्वाऽऽदर्शं वाऽभिनिदधाति स्वधिते मैनꣳहिꣳसीरिति येन पूषा बृहस्पतेरिति त्रिः प्राञ्चं प्रोहत्यप्रच्छिन्दन् सकृद् यजुषा द्विस्तूष्णीमथायसेन प्रच्छिद्यानडुहे गोमये निदधाति ॥१०—१७

'अथ' तदनन्तरम्। 'नापितं प्रेक्षमाणः' 'सवितारं मनसा ध्यायन्', 'आयमगात् सविता क्षुरेण (म० ब्रा० १,६,१)'—'इति' इमं मन्त्रं 'जपति' जपेत् (१०)। 'उष्णेन वायउदकेनेधि (म० ब्रा० १,६,२)'—'इति' इमं मन्त्रं पठन् 'वायुं मनसा ध्यायन् 'उष्णोदककंसं प्रेक्षमाणः' भवति सः (११)। 'आपउन्दन्तु जीवसे (म० ब्रा० १,६,३)'—'इति' इमं मन्त्रं पठन् 'दक्षिणेन पाणिना अप आदाय' 'कपुष्णिकां' शिरःपोषिकां शिरःपार्श्ववर्त्तिकेशजुटिकां 'उन्दन्ति' क्लेदयन्ति (१२)। 'विष्णोर्दंष्ट्रोसि (म० ब्रा० १,६,४)'—'इति' इमं मन्त्रं पठन्

'औदुम्बरं क्षुरमादर्शं वा' 'प्रेक्षते' (१३)। 'ओषधे त्राय-स्वैनम् (म० ब्रा० १·६,५)'—'इति' इमं मन्त्रं पठन् 'अभि-शिरोग्राः' शिरोऽभिमुखाग्राः 'दर्भपिञ्जूलीः' 'दक्षिणायां कपु-ष्णिकायां' 'निदधाति' धारयति (१४)। 'ताः' कपुष्णिका-सहिता दर्भपिञ्जूलीः 'वामेन पाणिना' 'निगृह्य' दृढतया-गृहीत्वा 'स्वधिते मैनं हिंसीः (१,६,६)'—'इति' इमं मन्त्रं पठन्, 'दक्षिणेन पाणिना' 'औदुम्बरं क्षुरम् आदर्शं वा' 'गृहीत्वा' 'अभिनिदधाति' यत्नतो धारयेत् (१५)। ततश्च तेनैवौदुम्बरेण क्षुरेण दर्पणेन वा 'प्राञ्चं' प्रागगतं चालयन् परन्तु 'अच्छिन्दन्' यथा च केशान् न छिन्द्यादेवं कृत्वा 'त्रिवारं' 'प्रोहति' कथङ्कारं वपनं कर्त्तव्यमिति सवितर्कं पश्यति। तत्र च 'सकृत्' एकवारं 'येन पूषा बृहस्पते (म० ब्रा० १,६,७)'—'इति' अनेन 'यजुषा' गद्यात्मकमन्त्रेण, 'द्विः' वारद्वयं 'तूष्णीम्' अमन्त्रकमेवेति (१६)। 'अथ' तदनन्तरम् 'आयसेन' लौह-मयेन क्षुरेण सपिञ्जूलीं दक्षिणकपुच्छिकां 'प्रच्छिद्य' पूर्वासादिते 'आनडुहे गोमये' 'निदधाति' स्थापयति (१७)। १०—१७

অনন্তর, পিতা বা পুরোহিত যিনি কার্য্য করিবেন তিনি সেই ক্ষুরহস্ত নাপিতকে দর্শন করিয়া মনে মনে জগৎপ্রসবিতা দেবতাকে ধ্যান করিয়া 'আয়মগাৎ (ম০ ব্রা০ ১,৬,১)'—এই মন্ত্র পাঠ করিবে (১০)। উষ্ণোদক সহিত কাংস্যপাত্র প্রদর্শন করিয়া মনে মনে বায়ু দেবতাকে ধ্যান করত 'উষ্ণেন বায়বায় (ম০ ব্রা০ ১,৬,২) এইমন্ত্র পাঠ করিবে (১১)। দক্ষিণ

হস্তে বালকের দক্ষিণ কপুষ্ণিকা * গ্রহণ করিয়া 'আপউন্দন্তু (মং ব্রাং ১,৬,৩)' এই মন্ত্র পাঠ করত তাহাতে সেই উষ্ণোদক সিঞ্চন পূর্ব্বক ক্লেদিত করিবে (১২)। 'বিষ্ণো-দ্র্ংষ্ট্রোঽসি (মং ব্রাং ১,৬,৪)' এই মন্ত্র পাঠ করত ডুমুর কাষ্ঠের ক্ষুর বা দর্পণ দেখিবে (১৩)। 'ওষধে ত্রায়স্বৈনং (মং ব্রাং ১,৬,৫)' এইমন্ত্র পাঠ করত সপ্ত দর্ভপিঞ্জূলী নিম্নমূল ঊর্দ্ধাগ্র সেই দক্ষিণ কপুষ্ণিকাতে ধারণ করা-ইবে (১৪)। পরে সেই দর্ভপিঞ্জূলীসহ দক্ষিণ কপুষ্ণিকা-গুলি বাম হস্তে দৃঢ়রূপে ধরিয়া 'স্বধিতে মৈনং হিংসীঃ (মং ব্রাং ১,৬,৬)'—এই মন্ত্র পাঠ করত দক্ষিণ হস্তে সেই ডুমুর কাষ্ঠের ক্ষুর বা দর্পণ লইয়া সেই কপুষ্ণিকাতে ভাল রূপে ধারণ করিবে (১৫) এবং তাহাই পূর্ব্বাভিমুখ করিয়া বারত্রয় চালাইয়া কিরূপে ছেদিত হইবে বিতর্ক করিবে। সেই বারত্রয় চালনে একবার 'যেন পূষা (মং ব্রাং ১,৬,৭)' —এই মন্ত্র পাঠ করিবে এবং অপর বারদ্বয় কোন মন্ত্রই পাঠ করিতে হইবে না। এই ডুমুরের ক্ষুর বা দর্পণ চালনে কেশ ছিন্ন না হয় (১৬)। অনন্তর লৌহ ক্ষুরের দ্বারা সেই দর্ভপিঞ্জূলীসহ দক্ষিণ কপুষ্ণিকা ছেদন করিয়া ষাঁড়ের গোবরে স্থাপন করিবে (১৭)। ১০—১৭

* মস্তকের উভয় পার্শ্বের কেশ গুলিকে কপুষ্ণিকা কহে অর্থাৎ কশব্দে শিরঃ, ঐ কেশ গুলি তাহার পোষক। এই জন্যই অদ্যাপি কান্যকুব্জ প্রদেশীয় ব্রাহ্মণাদি কপুষ্ণিকা বপন করান না, মস্তকের সম্মুখ ভাগ মাত্র বপন করাইয়া থাকেন, তাহাতে বায়ুবারি সেবনে মস্তিষ্ক সুস্থ থাকে।

**एतयैवावृता कपुच्छलम् ॥ १८**

'एतया एव आवृता' कथितपरिपाट्यैव 'कपुच्छलं' शिरः-पुच्छसदृशं पश्चात्केशकलापम् आयसेन क्षुरेण प्रच्छिद्य आनडुहे गोमये निदधाति । १८

কথিত প্রকারেই কপুচ্ছল ছেদনও করিবে। ১৮

**एतयोत्तरां कपुष्णिकाम् ॥ १९**

'एतया' परिपाट्या 'उत्तरां कपुष्णिकाम्' अपि आयसेन क्षुरेण प्रच्छिद्य आनडुहे गोमये निदधाति । १९

উত্তর কপুষ্ণিকা ছেদনেও এই নিয়মই অবলম্বনীয়। ১৯

**उन्दनप्रभृति त्वेवाभिनिवर्त्तयेत् ॥ २०**

कपुच्छलच्छेदने उत्तरकपुष्णिकाच्छेदने च 'उन्दनप्रभृति' पूर्वोक्तक्लेदनादि गोमये निधानान्तं (१२—१७ सू०) कर्म-जातम् 'अभिनिवर्त्तयेत्' निष्पादयेत्; न तत्पूर्वतनं नाप्ये-तत्परतनञ्च तत्र तत्र पृथक्त्वेनानुष्ठेयम् । २०

কপুচ্ছল ছেদনে * ও উত্তর কপুষ্ণিকা ছেদনে, উভয় স্থানেই উষ্ণ জলের দ্বারা ক্লেদিত করা প্রভৃতি কার্য্যগুলি সমস্তই পৃথক্ পৃথক্ করিতে হইবে; তৎপূর্ব্বের বা এতৎপরের কার্য্য সমস্ত, প্রত্যেক ছেদনের জন্য বিভিন্ন হইবে না। ২০

* মস্তকে পশ্চাদ্ভাগের কেশগুলিকে কপুচ্ছল কহে। অর্থাৎ ক-শব্দে শিরঃ, তাহার পুচ্ছ সদৃশ। এ গুলি শোভার্থ রক্ষিত হইয়া থাকে অতএব কান্যকুব্জাদি বাসীরা অনেকে রাখেন, অনেকে বপন করান।

**उभाभ्यां पाणिभ्यां मूर्द्धानं परिगृह्य जपेत् त्र्यायुषं जमदग्नेरिति ॥ २१**

इत्थं बालकस्य कपुष्णिकाद्वयं कपुच्छलञ्च छेदयित्वा उभाभ्यां पाणिभ्यां मूर्द्धानं परिगृह्य' 'त्र्यायुषं जमदग्नेः (म० ब्रा० १,६,८)'—'इति' इमं मन्त्रं 'जपेत्'। २१

এইরূপ কপুষ্ণিকাদ্বয় ও কপুচ্ছল ছেদিত হইলে পরে উভয় হস্তের দ্বারা বালকের মস্তক ধরিয়া 'ত্র্যায়ুষং জমদগ্নেঃ (ম০ ব্রা০ ১,৫,৮)'—এই মন্ত্র জপ করিবে। ২১

**एतयैवावृता स्त्रियास्तूष्णीम् मन्त्रेण तु होमः ॥ २२—२४**

'स्त्रियाः' कन्याया अपि कपुष्णिकादिच्छेदनम् 'एतया' 'आवृता' परिपाट्या 'एव' कार्यम् (२२)। तत्रायं विशेषः— 'तूष्णीम्' अमन्त्रकमेव सर्वम् (२३)। तत्राप्ययं विशेषः— 'मन्त्रेण तु होमः' चूडासंस्काराय होमस्तु तत्रापि मन्त्रेणैव कार्यः (२४)। २२—२४

কন্যার চূড়াকার্য্যও অবিকল এই নিয়মেই হইবে পরং মন্ত্র-শূন্য কিন্তু চূড়ার হোম মন্ত্রেই হইবে। ২২—২৪

**उदगग्नेरुत्सृप्य कुशलीकारयन्ति यथागोत्रकुल-कल्पमानडुहे गोमये केशान् कृत्वाऽरण्यं हृत्वा निखनन्ति स्तम्बे हैके निदधति यथार्थं गौर्दक्षिणा ॥ २५—२६ ॥ ६**

अग्नेः' उदक्' उत्तरस्मिन् 'उत्सृप्य' उत्सर्पणेनोपविश्य यथागोत्रकुलकल्पं' गोत्रकुलानुरूपं सशिखं शिखाशून्यं वा, पञ्च-चूडं त्रिचूडं वा (तथाच—"वासिष्ठाः पञ्चचूड़ाः स्युस्त्रिचूड़ाः कुण्डपायिनः" किञ्च "सशिखं वपनं कार्यमास्नानाद्ब्रह्मचारिणाम्। आशरीरविमोक्षाय ब्रह्मचर्यं न चेद् भवेत्"—इति। एवञ्च वसिष्ठ-गोत्राणां पञ्चचूड़ं मुण्डनम्, कुण्डपायिनां त्रिचूड़ं मुण्डनम्, कौथु-मानामासमावर्त्तनात् सशिखं वपनञ्चेति)। बहुवचनं साधारण-विध्यपेक्षम् (२५)। मुण्डयित्वा च तान् 'केशान्' 'आनडुहे गोमये कृत्वा' 'अरण्यं' 'हृत्वा' नीत्वा 'निखनन्ति' मृण्मध्ये प्रोथयन्ति (२६)। 'एके' आचार्य्यास्त्वाहुः—'स्तम्बे ह' झिण्टिवृक्षादिकुञ्जे एव 'निदधति' स्थापयन्ति तान् केशानिति (२७)। इति गतं चूड़ाकर्मेति 'यथार्थम्' यथाप्रयोजनं विहरेत् (२८)। अस्य च चूड़ाकर्मणः 'दक्षिणा' 'गौः' एकैव (२९)। २५—२९ ॥ ९

इति सामवेदीये गोभिलगृह्यसूत्रे द्वितीयप्रपाठके नवमखण्डस्य व्याख्यानं सामश्रमिकृतं समाप्तम्। २.९

ঐরূপে কপুষ্ণিকাদ্বয় ও কপুচ্ছল ছেদিত হইলে পরে বালক তথা হইতে সরিয়া অগ্নির উত্তর ভাগে গিয়া বসিবে। আত্মীয়গণ নাপিতের দ্বারা গোত্র ও কুলানুসারে পঞ্চচূড় বা ত্রিচূড় এবং শিখা-শূন্য বা সশিখ করিয়া মুণ্ডন করাইয়া দিবে*

---

* অতএব যাঁহাদের বশিষ্ঠ গোত্র তাঁহারা পঞ্চচূড়া রাখিয়া বপন করাইয়া থাকেন; যাঁহারা কুণ্ডপায়ী, তাঁহারা চূড়াত্রয় রক্ষা করেন এবং যাঁহাদের কৌথুম শাখা, তাঁহারা বেদাধ্যয়ন সমাপ্তির পরে সমাবর্ত্তন পর্য্যন্ত শিখাও মুণ্ডন করাইয়া থাকেন্ কিন্তু যদি কেহ চির-ব্রহ্মচর্য্য

( २৪ )। মুণ্ডিত হইলে সেই কেশগুলি বনে লইয়া পুঁতিয়া ফেলিবে ( ২৬ )। কোন কোন আচার্য্য বলেন যে, বনে লইয়া ঝোপ্‌ঝাপ দেখিয়া ফেলিয়া দিলেও হয় ( ২৭ )। এইরূপে চূড়াকর্ম শেষ হইলে যথাপ্রয়োজন বিহরণাদি করিবে ( ২৮ )। এই চূড়া কার্য্যের দক্ষিণা এক গাভী ॥ ২৫—২৯ ॥ ৯

দ্বিতীয় অধ্যায়ের নবম খণ্ডের অনুবাদ সমাপ্ত ॥ ২, ৯

अथोपनयनम्। तत्रादौ तावत् कालं विधत्ते ;—

অথ উপনয়ন প্রকরণ। প্রথমত উপনয়নের কাল নিরূপিত হইতেছে ;-

**गर्भाष्टमेषु ब्राह्मणमुपनयेत्। १**

**'गर्भाष्टमेषु' गर्भमासतो गणनया ये अष्टमाब्दकालास्तेषु यस्मिन् कस्मिन्नपि शुभदिने 'ब्राह्मणम्' ब्राह्मणजातीयकुमारम् 'उपनयेत्' वक्ष्यमाणप्रकारेण संस्कृत्य कृत्स्नवेदाध्ययनाय गुरोरन्तिकं प्रापयेत्। १**

যে মাসে গর্ভ হইয়াছিল, সেই মাস হইতে গণনায় যে বৎসর অষ্টম হইবে, সেই বর্ষের যে কোন শুভতিথিতে ব্রাহ্মণকুমারকে উপনীত করিবে অর্থাৎ সংস্কার পূর্ব্বক বেদাধ্যয়নার্থ উপযুক্ত গুরুর সমীপে নীত করিবে। ১

অবলম্বন করেন, সমাবর্ত্তন করিবার মানস না থাকে, তবে তাঁহাকে শিখা রক্ষা পূর্ব্বক মুণ্ডন করাইতে হয়, ইত্যাদি।

## गर्भैकादशेषु क्षत्रियम् । २

'गर्भैकादशेषु' 'क्षत्रियम्' उपनयेत् । २

ক্ষত্রিয়-কুমারকে, গর্ভমাস হইতে গণনায় একাদশাব্দে আচার্য্যসমীপে উপনীত করিবে। ২

## गर्भद्वादशेषु वैश्यम् । ३

उपनयेदित्येव । ३

বৈশ্য-কুমারকে, গর্ভমাস হইতে গণনায় দ্বাদশাব্দে আচার্য্যসমীপে উপনীত করিবে। ৩

## आषोड़शाद्वर्षाद् ब्राह्मणस्यानतीतः कालोभवत्याद्वाविंशात् क्षत्रियस्याचतुर्विंशाद्वैश्यस्य । ४

'ब्राह्मणस्य' 'आ षोड़शवर्षात्' षोड़शाब्दवयःसमाप्तिं यावत्, 'क्षत्रियस्य' 'आ द्वाविंशात्' द्वाविंशाब्दान्तं यावत्, 'वैश्यस्य' 'आ चतुर्विंशात्' चतुर्विंशाब्दान्तं यावत् 'अनतीतः कालो भवति' उपनयनस्येति । ४

ব্রাহ্মণ-কুমারের ষোড়শাব্দ বয়ঃক্রম পূর্ণ হওআ পর্য্যন্ত উপনয়ন কাল অতীত হইবে না। অর্থাৎ যদি গর্ভাষ্টম বর্ষে উপনীত করিতে না-পারে'ত ষোড়শবর্ষ বয়ঃ শেষ পর্য্যন্ত সময়ের মধ্যে যে কোন শুভদিনে উপনীত করিতে পারিবে, তাহাতে হানি নাই। ক্ষত্রিয় কুমারের দ্বাবিংশাব্দ বয়ঃ শেষ পর্য্যন্ত এবং বৈশ্য-কুমারের চতুর্বিংশাব্দ বয়ঃ শেষ পর্য্যন্ত উপনয়ন হইতে পারিবে। ৪

**अत ऊर्द्ध्वं पतितसाविलीका भवन्ति । ५**

'अतऊर्द्ध्वं' ब्राह्मणस्य षोड़शाब्दात् परं, क्षत्रियस्य द्वाविंशाब्दात् परं, वैश्यस्य चतुर्विंशाब्दात् परम् । अर्थतः एतावत्-कालमप्यनुपनीताश्चेत् तर्हि 'पतितसाविलीकाः' व्रात्यापरपर्यायाः 'भवन्ति' । ५

উক্ত কালের পরেই অর্থাৎ ব্রাহ্মণকুমার ষোড়শাব্দ বয়সের পরেই, ক্ষত্রিয়কুমার দ্বাবিংশাব্দ বয়সের পরেই, বৈশ্যকুমার চতুর্ব্বিংশাব্দ বয়সের পরেই "সাবিত্রীপতিত" অর্থাৎ সাবিত্রী মন্ত্রোপদেশের অনুপযুক্ত হইবে । ৫

**नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्नैभिर्विवहेयुः । ६**

'एतान्' पतितसाविलीकान् 'न उपनयेयुः, न अध्यापयेयुः, न याजयेयुः' किञ्च 'एभिः' सह 'न विवहेयुः' कन्योद्वाहसम्बन्धं न कुर्युः । इति गतः कालनियमः । ६

উক্ত সাবিত্রীপতিত গণের আর উপনয়ন হইবে না, ইহাদিগকে কেহ অধ্যয়নও করাইবে না, কেহ যাজনও করাইবে না, ইহাদের সহিত বৈবাহিক সম্বন্ধও সমাজে নিষিদ্ধ হইবে। ইহাই উপনয়নের কালনিয়ম । ৬

**यदहरुपैष्यन्माणवको भवति प्रगएवैनं तदहर्भोजयन्ति कुशलीकारयन्त्याप्लावयन्त्यलङ्कुर्वन्त्यहतेन वाससाऽऽच्छादयन्ति । ७**

'माणवकः' अनधीतबालकः 'यदहः' यस्मिन्नहनि 'उपैष्यन्' उपनीतीभविष्यन् भवति, 'तदहः' तस्मिन्नहनि 'प्रगे एव' प्रातरेव 'भोजयन्ति' मात्रादयः; यान् कानप्याहार्यान् प्रातराशमात्रं वा तं माणवकमिति शेषः। ततः 'कुशलीकारयन्ति' मुण्डयन्ति। ततः 'आप्लावयन्ति' स्नापयन्ति। ततः 'अलङ्कुर्वन्ति' शोभयन्ति। ततः 'अहतेन वाससा आच्छादयन्ति'। सर्वत्रैव तं माणवकम् मात्रादय इति। ७

যে দিবসে মাণবক অর্থাৎ অনুপনীত বালক উপনীত হইবে, সেই দিন প্রাতে তাহাকে প্রাতরাশ বা আরও অপর খাদ্য আহার করাইবে। পরে তাহাকে মুণ্ডিত করাইবে। অনন্তর তাহাকে স্নান করাইবে। তাহাকে শোভিত করিবে। তাহাকে অখণ্ড বস্ত্রের দ্বারা আবৃত করিবে। ৭

**क्षौमशाणकार्पासौर्णान्येषां वसनानि। ८**

'एषां' ब्राह्मणादीनां त्रयाणां 'वसनानि' परिधेयानि 'क्षौमशाणकार्पासौर्णानि' कुर्युः। ८

ইহাদের পরিধেয় বসন—ক্ষৌম, শাণ, কার্পাস ও ঔর্ণ হইবে। ৮

**ऐणेयरौरवाजान्यजिनानि। ९**

एषां 'अजिनानि' उत्तरीयचर्माणि 'ऐणेयरौरवाजानि' कर्त्तव्यानि। ९

ইহাদের অজিন অর্থাৎ উত্তরীয় চর্ম,—ঐণেয়, রৌরব ও আজ হইবে। ৯

मुञ्जकाशताम्बल्योरशनाः । १०

एषां 'रशनाः' कटिबन्धनरज्जवः 'मुञ्जकाशताम्बल्यः' कर्त्तव्याः । १०

ইহাদের রশনা অর্থাৎ কটি-বন্ধনী,—মৌঞ্জী, কাশী ও তাম্বলী হইবে। ১০

पार्णवैल्वाश्वत्थाद्दण्डाः । ११

एषां 'दण्डाः' हस्तग्राह्याः 'पार्णवैल्वाश्वत्थाः' कर्त्तव्याः । ११

ইহাদের হস্তগ্রাহ্য দণ্ড,—পার্ণ, বৈল্ব ও আশ্বত্থ হইবে। ১১

**क्षौमशाणं वा वसनं ब्राह्मणस्य कार्पासं क्षत्रियस्याविकं वैश्यस्यैतेनैवेतराणि द्रव्याणि व्याख्यातान्यलाभे वा सर्वाणि सर्वेषाम् । १२—१४**

पूर्वोक्तानां क्षौमादीनां मध्ये,—ब्राह्मणस्य 'क्षौमं' तसरादि प्रसिद्धं 'वा' अथवा 'शाणं' शणसूत्रमयं 'वसनं' परिधेयं कार्य्यम् । 'क्षत्रियस्य' 'कार्पासं' कार्पाससूत्रमयं वसनं कार्य्यम् । 'वैश्यस्य' 'आविकं' अव्यूर्णामयं वसनं कार्य्यम् । 'एतेनैव' वसननियमकथनप्रकारेणैव 'इतराणि द्रव्याणि' अजिनरशनादण्डरूपाणि 'व्याख्यातानि' कथितानीवेति । तथाच पूर्वसूत्रेषु (९, १०, ११) यथाक्रमतोव्यवस्था । ब्राह्मणस्य—'ऐणेयं' कृष्णसारमृगचर्म्म अजिनम्, 'मौञ्जी' मुञ्जमयी रशना, 'पार्णः' पलाशकाष्ठीयश्च दण्डः । क्षत्रियस्य—'रौरवं' रुरुमृगचर्म्म अजिनम्,

'काशी' काशमयी रशना, 'वैल्व:' विल्वकाष्ठीयश्च दण्ड:। वैश्यस्य —'आजं' अजामृगचर्म अजिनम्, 'ताम्बली' शणमयी रशना, 'आश्वत्थ:' अश्वत्थकाष्ठीयश्च दण्ड:। 'वा' अथवा 'अलाभे' ब्राह्मणादीनाम् क्षौमैणेयादीनामप्राप्तौ 'सर्वेषां' ब्राह्मणक्षत्रिय-वैश्यानां 'सर्वाणि' क्षौमादीनि ऐणेयादीनि मौञ्ज्यादीनि पार्णादीनि च द्रव्याणि यस्य यथालाभतो ग्राह्याणि। १२—१४

তন্মধ্যে ; ব্রাহ্মণের পরিধেয় বসন ক্ষৌম (তসর প্রভৃতি) অথবা শাণ (শণের), ক্ষত্রিয়ের কার্পাস (তূলজাত), বৈশ্যের ঔর্ণ (ঊর্ণী) হইবে। অজিনাদিও এইরূপ ক্রমেই বুঝিয়া লও (যথা— ব্রাহ্মণের ঐণেয় অর্থাৎ কৃষ্ণসার মৃগচর্ম্ম, ক্ষত্রিয়ের রৌরব অর্থাৎ রুরুমৃগের চর্ম্ম, বৈশ্যের আজ অর্থাৎ অজাচর্ম্ম অজিন হইবে ; ব্রাহ্মণের মুঞ্জময়ী রসনা, ক্ষত্রিয়ের কাশতৃণময়ী রশন ও বৈশ্যের শণময়ী রসনা হইবে এবং ব্রাহ্মণের পলাশ কাষ্ঠের দণ্ড, ক্ষত্রিয়ের বিল্ব কাষ্ঠের দণ্ড ও বৈশ্যের অশ্বত্থ কাষ্ঠের দণ্ড হইবে)। যদি সময়ানুসারে কথিতানুরূপ ব্রাহ্মণাদির যথাযোগ্য বসনাদি দুর্ঘট হয়, তাহা হইলে সকলেই সকল প্রকার ব্যবহার করিতে পারিবে অর্থাৎ উক্ত ক্ষৌমাদি চারি প্রকারের, যখন যে কোনরূপ বসন সুলভ হইবে, তখন তাহাই ব্রাহ্মণাদি নির্ব্বিশেষে ব্যবহার করিতে পারিবে, অজিনাদির বিষয়েও সময়ক্রমে এইরূপ যথালাভ ব্যবস্থা করিবে। ১২—১৪

पुरस्ताच्छालायाउपलिप्तेऽग्निरुपसमाहितोभवति। १५

'शालायाः पुरस्तात्' 'उपलिप्ते' स्थाने 'अग्निः उपसमाहितः भवति'। १५

উপনয়ন যজ্ঞশালার পূর্ব্বভাগে উপলিপ্ত স্থানে অগ্নি স্থাপিত করিবে। ১৫

**अग्ने व्रतपतइति हुत्वा पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङाचार्य्योऽवतिष्ठते। १६**

तत्र चाग्नौ 'आचार्यः' वेदाध्यापकः कश्चित्, माणवकः प्रतिनिधिर्भवन् 'अग्ने व्रतपते (म० ब्रा० १,६,९—१३)'—'इति' एभिः पञ्चभिर्मन्त्रैः 'हुत्वा' 'अग्नेः पश्चात् उदग्रेषु दर्भेषु' 'प्राङ्' प्राङ्मुखः सन् 'अव तिष्ठते' अवतिष्ठेत। १६

সেই অগ্নিতে আচার্য্য অর্থাৎ জনৈক বেদাধ্যাপক, মাণবকের প্রতিনিধি স্বরূপ হইয়া 'অগ্নে ব্রতপতে (ম০ ব্রা০ ১,৬,৯—১৩)' প্রভৃতি পঞ্চ মন্ত্রে পাঁচটি আহুতি প্রদান করিয়া অগ্নির পশ্চাদ্ভাগে উত্তরাগ্র কুশা সমূহে অবস্থিতি করিবে। ১৬

**अन्तरेणाग्न्याचार्य्यौ माणवकोऽञ्जलिकृतोऽभिमुख आचार्य्यमुदगग्रेषु दर्भेषु। १७**

'अन्तरेणाग्न्याचार्यौ' अग्न्याचार्ययोः मध्ये 'माणवकः' 'आचार्यम् अभिमुखः' 'अञ्जलिकृतः' उदकग्रहणोपयुक्त कृताञ्जलिः सन् 'उदगग्रेषु दर्भेषु' अवतिष्ठेत। १७

অগ্নি ও আচার্য্যের মধ্যস্থলে পাতিত উত্তরাগ্রকুশা-

সমূহে, আচার্য্যাভিমুখ ও কৃতাঞ্জলি হইয়া মাণবক অবস্থিতি করিবে। ১৭

**तस्य दक्षिणतोऽवस्थाय मन्त्रवान् ब्राह्मणोऽपामञ्जलिं पूरयत्युपरिष्टाच्चाचार्य्यस्य। १८,१९**

'तस्य' तादृशावस्थस्य माणवकस्य 'दक्षिणतः' दक्षिणस्यां तिष्ठन् कश्चित् 'मन्त्रवान्' अधीतवेदः 'ब्राह्मणः' तस्यैव माणवकस्य 'अञ्जलिम्' 'अपां' दानेन 'पूरयति'। 'उपरिष्टात्' ततः परस्तात् 'आचार्यस्य' 'च' अपि अञ्जलिं पूरयति अपां दानेनेति। १८—१९

সেই মাণবকের দক্ষিণে থাকিয়া কোন অধীত-বেদ ব্রাহ্মণ, সেই মাণবকের অঞ্জলি, জলের দ্বারা পূর্ণ করিবে। তাহার পরেই আচার্য্যের অঞ্জলিও জলপূর্ণ করিবে। ১৮,১৯

**प्रेक्षमाणोऽ्जपत्यागन्त्रा समगन्महीति ब्रह्मचर्य्यमागामिति वाचयति कोनामासीति नामधेयं पृच्छति तस्याचार्य्यः। २०—२२**

'आचार्यः' 'प्रेक्षमाणः' माणवकमिति यावत्; 'आगन्त्रा समगन्महि (म० ब्रा० १,६,१४-१५)'—'इति' इमृचं 'जपति' स्वयम्। 'ब्रह्मचर्यमागाम् (म० ब्रा० १,६,१६)'—'इति' इमामृचं 'वाचयति' माणवकम्। 'कोनामासि (म० ब्रा० १,६,१६)'—'इति' इमं मन्त्रं पठन् 'तस्य' माणवकस्य 'नामधेयं

।'। २०—२२

আচার্য্য, সেই মাণবকের প্রতি দৃষ্টিপূর্ব্বক 'আগন্ত্রাসমগন্মহি (ম০ ব্রা০ ১,৬,১৪-১৫)' এই মন্ত্রদ্বয় স্বয়ং পাঠ করিবে, 'ব্রহ্মচর্য্যমাগাম্ (ম০ ব্রা০ ১,৬,১৬)' মন্ত্রটি মাণবকে পাঠ করাইবে এবং 'কোনামসি (ম০ ব্রা০ ১,৬,১৭)' মন্ত্র পাঠ করত সেই মাণবকের নামধেয় জিজ্ঞাসা করিবে। ২০—২২

**अभिवादनीयं नामधेयं कल्पयित्वा देवताश्रयं वा नक्षत्राश्रयं वा गोत्राश्रयमप्येके उत्सृज्यापामञ्जलिमाचार्य्यो दक्षिणेन पाणिना दक्षिणं पाणिꣳ साङ्गुष्ठं गृह्णाति देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ हस्तं गृह्णाम्यसाविति। २३—२६**

'आचार्यः' 'अभिवादनीयं' अभिवादनाय हितं 'नामधेयं' द्वितीयजन्मसूचकं नूतनं नाम 'कल्पयित्वा' अमुकनामाहमस्मीति तन्माणवकनामैव तन्माणवकं वाचयित्वा (२३), 'अपामञ्जलिं' गृहीतमुदकाञ्जलिम्' 'उत्सृज्य' परित्यज्य, 'देवस्य ते (म० ब्रा० १,६,१८),—'इति' इमं मन्त्रं पठन् 'दक्षिणेन पाणिना' 'साङ्गुष्ठं दक्षिणं पाणिं' 'गृह्णाति' (२६)। तत्र द्विजत्वसूचकं नामधेयं कीदृशं कर्त्तव्यमित्याह ;—'देवताश्रयं' वेदगर्भब्रह्मव्रतेत्यादिकं, 'वा' अथवा 'नक्षत्राश्रयं' आश्विन-रौहिणेत्यादिकं (२४), 'वा' अथवा 'एके' आचार्याः 'गोत्राश्रयं' वैद-पैल्वेत्यादिकम् 'अपि' नामधेयम् आहुरिति शेषः (२५)। २३—२६

পরে আচার্য্য স্বয়ংই অভিবাদনকালে কথনীয় দ্বিতীয় জন্মসূচক নূতন একটি নাম কল্পনা করিয়া সেই মাণবককে 'আমি অমুক-নাম, গুরো! তোমাকে অভিবাদন করি' বলাইয়া গৃহীত উদকাঞ্জলি ত্যাগ করিয়া 'দেবস্য তে (ম° ব্রা° ১, ৬,১৮)'—এই মন্ত্রটি পাঠ করত দক্ষিণ হস্তের দ্বারা মাণবকের বৃদ্ধাঙ্গুষ্ঠ সহিত দক্ষিণ হস্ত গ্রহণ করিবে। সেই নামটি দেবতাশ্রিত বা নক্ষত্রাশ্রিত অথবা গোত্রাশ্রিত হইবে (দেবতাশ্রিত যথা— বেদগর্ভ, ব্রহ্মব্রত, প্রভৃতি; নক্ষত্রাশ্রিত যথা— আশ্বিন, রৌহিণ প্রভৃতি; গোত্রাশ্রিত যথা— বৈদ, পৈল্ব প্রভৃতি)। ২৩—২৬

**অথৈনং প্রদক্ষিণমাবর্ত্তয়তি সূর্য্যস্যাবৃতমন্বাবর্ত্তস্বাসাবিতি। ২৭**

'অথ' অনন্তরম্। 'এনং' মাণবকম্ 'সূর্য্যস্য (ম° ব্রা° ১৬,১৯)'—'ইতি' মন্ত্রং পঠন্ 'প্রদক্ষিণং' যথা স্যাত্তথা "আবর্ত্তয়তি' প্রাঙ্মুখং করোতি, আচার্য্যএব। ২৭

অনন্তর এই মাণবককে প্রদক্ষিণক্রমে পূর্ব্বাভিমুখ করিবে। তৎকালে সূর্য্যস্য (ম° ব্রা° ১,৬,১৯)' মন্ত্রটি পাঠ করিবে। ২৭

**দক্ষিণেন পাণিনা দক্ষিণমংসমন্ববমৃশ্যানন্তর্হিতাং নাভিমভিমৃশেৎ প্রাণানাং গ্রন্থিরসীতি। ২৮**

'দক্ষিণেন পাণিনা', মাণবকস্য 'দক্ষিণমংসম্' 'অন্বব-

स्कन्ध' स्पृशन्नेव 'प्राणानां ग्रन्थिरसि ( म० ब्रा० १,६,२० )'— 'इति' मन्त्रं पठन् 'अनन्तर्हितां' वस्त्राच्छादनशून्यां 'नाभिम्' 'अभिमृशेत्' संस्पृशेत् आचार्य्यएव। २८

পরে আচার্য্য 'প্রাণানাং গ্রন্থিরসি ( ম০ ব্রা০ ১, ,২০)' মন্ত্র পাঠ করত দক্ষিণ হস্ত দ্বারা সেই মাণবকের দক্ষিণ স্কন্ধের উপর দিয়া বস্ত্রাদ্যাবরণশূন্য নাভি স্পর্শ করিবে। ২৮

## उत्सृप्य नाभिदेशमहुरइति। २९

माणवकस्य 'नाभिदेशम्' 'उत्सृप्य' हस्ताग्रचालनेन स्पृष्ट्वा 'अहुरः (म० ब्रा० १,६,२१)'—'इति' मन्त्रं पठेत् आचार्य्यः। २९

মাণবকের নাভিদেশে হাথ বুলাইয়া আচার্য্য 'অহুরঃ ( ম০ ব্রা০ ১,৬,২১)' মন্ত্র পাঠ করিবে। ২৯

## उत्सृप्य हृदयदेशं कृशनइति। ३०

माणवकस्य 'हृदयदेशं' 'उत्सृप्य' हस्ताग्रचालनेन स्पृष्ट्वा 'कृशनः (म० ब्रा० १,६,२२)'—'इति' मन्त्रं पठेत् आचार्य्यः। ३०

এইরূপে হৃদয়দেশে হাথ বুলাইয়া 'কশানঃ ( ম০ ব্রা০ ১,৬,২২ ) মন্ত্র পাঠ করিবে। ৩০

## दक्षिणेन पाणिना दक्षिणमंऽसमन्वालभ्य प्रजापतये त्वा परिददाम्यसाविति। ३१

'दक्षिणेन पाणिना', माणवकस्य 'दक्षिणमंसम्' 'अन्वा-

लभ्य' स्पृष्ट्वा 'प्रजापतये त्वा ( म० ब्रा० १, ६, २३ )' – 'इति' मन्त्रं पठेत् आचार्यः । ३१

অনন্তর আচার্য্য, দক্ষিণ হস্তের দ্বারা মাণবকের দক্ষিণ স্কন্ধ স্পর্শ করিয়া 'প্রজাপতয়ে ত্বা ( ম০ ব্রা০ ১,৬,২৩ )' মন্ত্র পাঠ করিবে। ৩১

सव्येन सव्यं देवाय त्वा सवित्रे परिददाम्यसाविति । ३२

'सव्येन' वामेन पाणिना' माणवकस्य 'सव्य'' वाममंसं स्पृष्ट्वा 'सवित्रे त्वा ( म० ब्रा० १,६,२४ )'—'इति' मन्त्रं पठेत् आचार्यः । ३२

ঐরূপেই বাম হস্তের দ্বারা মাণবকের বাম স্কন্ধ স্পর্শ করিয়া 'সবিত্রে ত্বা (ম০ ব্রা০ ১,৬,২৪)' মন্ত্র পাঠ করিবে।৩২

अथैनं संप्रेष्यति ब्रह्मचार्य्यस्यसाविति समिधमाधेह्यपोऽशानकर्म्मकुरु मा दिवा स्वाप्सीरिति । ३३—३४

'अथ' तदनन्तरम् । आचार्यः, 'एनं' माणवकं 'त्वमेतन्नामकः, अद्यप्रभृति ब्रह्मचारी असि ( म० ब्रा० १,६,२५ )'—'इति' हेतोः 'समिधम् आधेहि अग्नौ प्रतिदिनमेव समिदाधानं कुरु, 'अपोऽशानकर्म' यथास्थानं यथाप्रयोजनञ्च शौचाचमनादिकं च कुरु, 'मा दिवा स्वाप्सीः'. दिवानिद्राञ्च मा कुरु,—

'इति' एतन्त्रितयोपदेशबोधकं मन्त्रम् ( म० ब्रा० १,६,२६ ) पठन् 'सम्प्रेष्यति' उपदिशति। ३२—३४

তদনন্তর আচার্য্য এই মাণবককে 'তুমি অদ্য হইতে এই নামে প্রসিদ্ধ ব্রহ্মচারী হইতেছ ( মং ব্রাং ১,৬,২৫ ), প্রতিদিন সায়ংপ্রাতঃ অগ্নিতে সমিদাধান করিবা এবং শৌচাচার যুক্ত হইবা, দিবসে নিদ্রা যাইবা না ( মং ব্রাং ১,৬, ২৬ )' এই উপদেশত্রয় প্রদান করিবে। ৩৩,৩৪

उदङ्ङग्नेरुत्सृप्य प्राङाचार्य्य उपविशत्युदगग्रेषु दर्भेषु। ३५

'आचार्यः' 'अग्नेः' 'उदक्' उत्तरस्यां 'उदगग्रेषु दर्भेषु' 'प्राङ्' प्राङ्मुखः सन् 'उपविशति' उपविशेत्। ३५

পরে আচার্য্য, অগ্নির উত্তরে উত্তরাগ্রপাতিত কুশাসমূহে পূর্ব্বাভিমুখ উপবিষ্ট হইবে। ৩৫

प्रत्यङ्माणवको दक्षिणजान्वक्तोऽभिमुख आचार्य्यमुदगग्रेष्वेव दर्भेषु। ३६

'माणवकः' तत्रैव 'उदगग्रेष्वेव दर्भेषु' 'दक्षिणजान्वक्तः' भूमिगतदक्षिणजानुकः 'आचार्यमभिमुखः' 'प्रत्यङ्' पश्चिममुखः सन् उपविशेदित्यर्थः। ३६

মাণবকও সেই স্থলেই উত্তরাগ্রপাতিত কুশাসমূহে, স্বীয় দক্ষিণজানু ভূমিলগ্ন করিয়া আচার্য্যাভিমুখ উপবিষ্ট হইবে। ৩৬

**अथैनं त्रिः प्रदक्षिणं मुञ्जमेखलां परिहरन् वाचयतीयं दुरुक्तात् परिबाधमानेत्यृतस्य गोप्त्रीति च । ३७**

'अथ' तदनन्तरम् । आचार्यः 'एनं' माणवकं 'त्रिःप्रदक्षिणं' यथास्यात्तथा 'मुञ्जमेखलां' मुञ्जमयीं रशनां 'परिहरन्' परिधापयन् 'इयं दुरुक्तात् (म० ब्रा० १,६,२७)'—'इति' मन्त्रं, ऋतस्य गोप्त्री (म० ब्रा० १,६,२८)'—'इति' मन्त्रं 'च' 'वाचयति' । अत्रैव यज्ञोपवीतपरिधापनव्यवहारश्च, परं कौथुमानां सूत्रकारानुल्लेखादकृतेऽपि न दोष इति नव्याः । वस्तुतो वेदाध्ययनायाचार्यसमीपे नयनमेवोपनयनं, यज्ञोपवीतधारणन्तु दैवकार्यानुष्ठानार्थमेव सूत्रकारेण विहितमिति यदा-यदैव दैवकार्यं कर्त्तव्यं भवेत् यदा तदैव धार्यं स्यादिति न क्षतिः, शिखापरिरक्षणन्तु सर्वथैव कार्यमेवान्यथा दैवकार्यकाले कुतआयास्यतीति । ३७

আচার্য্য, তাহাকে মুঞ্জের নির্ম্মিত মেখলা (কটীবন্ধনী) ত্রিরাবৃত্তি করিয়া পরাইয়া ইয়ং দুরুক্তাৎ (মং ব্রাং ১,৬,২৭)' মন্ত্র এবং 'ঋতস্য গোপ্ত্রী (মং ব্রাং ১,৬,২৮) মন্ত্র পাঠ করাইবে *। ৩৭

* এই সময়েই যজ্ঞোপবীত ধারণ করাইবার রীতি প্রচলিত আছে পরং তদ্বিষয়ে সূত্রকার কিছুই বলেন নাই। বস্তুত দৈব কার্য্য মাত্রেই যজ্ঞোপবীত ধারণ করিতেই হইবে, পূর্ব্বে বলা হইয়াছে এবং ইহার পরেই সায়ং হোম দৈব কার্য্য আসিতেছে সুতরাং এই স্থলেই যজ্ঞোপবীত গ্রহণীয় হইতেছে কিন্তু এ নিয়মে যজ্ঞোপবীত যে সর্ব্বদাই ধারণীয়, তাহা

**অথোপসীদত্যধীহি ভোঃ সাবিত্রীং মে ভবাননুব্রবীত্বিতি। ৩৮**

'অথ' তদনন্তরম্। মাণবকঃ 'ভোঃ!' 'অধীহি' অধ্যাপয়, 'ভবান্ মে সাবিত্রীম্ অনুব্রবীতু'—'ইতি' প্রার্থনাবাক্যদ্বয়ং কথয়ন্ 'উপসীদতি' শরণগতো ভবতি। ৩৮

অনন্তর মাণবক গুরুর নিকটে কৃতাঞ্জলি নম্রভাবে প্রার্থনা করিবে—'ভো গুরো! আমাকে বেদ অধ্যয়ন করান্, আমাকে সাবিত্রী উপদেশ করুন'। ৩৮

**তস্মা অন্বাহ পচ্ছোঽর্দ্ধর্চশ ঋক্শ ইতি মহাব্যাহৃতীশ্চ বিহৃতা ওঁকারান্তাঃ। ৩৯—৪০**

ততশ্চ 'তস্মৈ' মাণবকায়, প্রথমং 'পচ্ছঃ' পাদং পাদং কৃত্বা, ততঃ 'অর্দ্ধর্চশঃ' অর্দ্ধর্চমর্দ্ধর্চং কৃত্বা, তদন্তে চ 'ঋক্শঃ' পূর্ণামৃচমাবর্ত্তয়িত্বা 'ইতি' এবমেব 'অন্বাহ' অনুক্রমেণ ব্রূয়াৎ (৩৯)। 'চ' অপি 'বিহৃতাঃ' বিভিন্নীকৃতাঃ 'ওঁকারান্তাঃ' 'মহাব্যাহৃতীঃ' ভূঃ ভুবঃ স্বঃ ইতি অনুব্রূয়াৎ ততঃ ওঁ ইত্যস্যাপ্যুপদেশঃ কার্য্য ইত্যর্থঃ। ৩৯,৪০

এইরূপে মাণবক কর্ত্তৃক বেদাধ্যয়ন এবং তাহার প্রারম্ভসূচক সাবিত্রীমন্ত্রের প্রথম উপদেশ প্রার্থিত হইলে, আচার্য্য,

হইতেছে না পরং শিখাটী অবশ্যই রক্ষণীয়, যেহেতু শিখা রক্ষিত না থাকিলে দৈব কার্য্যাদি কালে কোথা হইতে আসিবে॥

তাহাকে, প্রথমে এক এক চরণ করিয়া, পরে অর্দ্ধর্চ্চ অর্দ্ধর্চ্চ করিয়া, তৎপরে সম্পূর্ণ ঋক্‌টি বার বার আবৃত্তি করাইয়া দিবে *। তৎপশ্চাৎ ভূঃ, ভুবঃ ও স্বঃ—এই মহাব্যাহৃতি-ত্রয় পৃথক্‌রূপে এবং ওঁকারও অভ্যাস করাইয়াদিবে। ৩৯,৪০

**বার্ক্ষমস্মৈ দণ্ডং প্রযচ্ছন্ বাচযতি সুশ্রবঃ সুশ্র-বসং মা কুর্বিতি। ৪১**

**'চ' ততঃ 'অস্মৈ' মাণবকায় 'বার্ক্ষং' পলাশবৃক্ষাবযবং 'দণ্ডং' 'প্রযচ্ছন্' 'সুশ্রবঃ সুশ্রবসং মা কুরু (ম০ ব্রা০ ১,৬,৩১)' —'ইতি' মন্ত্রং 'বাচযতি' মাণবকমেব। ৪১**

পরে আচার্য্য, এই মাণবকের হস্তে পলাশ বৃক্ষের দণ্ড প্রদানপূর্ব্বক 'সুশ্রবসঃ সুশ্রবসং মা কুরু (মং ব্রাঃ ১,৬,৩১) মন্ত্র পাঠ করাইবে। ৪১

**অথ ভৈক্ষং চরতি মাতরমেবাগ্রে দ্বে চান্যে সুহৃদৌ যাবত্যো বা সন্নিহিতাঃ স্যুরাচার্য্যায় ভৈক্ষং নিবে-দযতি। ৪২—৪৪**

**'অথ' উপনযনানন্তরং 'ভৈক্ষং' ভিক্ষার্থং 'চরতি' অটতি (৪২)। 'অগ্রে' 'মাতরমেব' ভিক্ষেতেতি শেষঃ। 'চ' অপি**

* যাঁহারা কাশ্যাদি প্রদেশে বেদাধ্যাপনের প্রণালী দেখিয়াছেন, তাঁহারা ইহা অতি সুন্দর রূপে হৃদয়ঙ্গম করিতে পারিবেন।

मातुरेवं 'अन्ये द्वे सुहृदौ' ततः परं भिक्षेत। 'वा' अथवा 'यावत्यः' स्त्रियः 'सन्निहिताः' तत्रोपस्थिताः स्युः, ताः सर्वा एव मात्रादिक्रमेण प्रथमं भिक्षेत। पुरुषभिक्षणस्य नात्रोल्लेख- इत्यपि धेयम् ( ४३ )। सङ्गृहीतञ्च तद् 'भैक्षं' भिक्षान्नं सर्वमेव 'आचार्याय' 'निवेदयति' उत्सृजति ( ४४ )। ४२—४४

এইরূপে মাণবক উপনীত হইলে পরে ভিক্ষাচরণ করিবে। প্রথমে মাতার নিকটে ভিক্ষা করিবে, পরে মাতারই দুই সুহৃতের নিকটে ভিক্ষা করিবে অথবা সেস্থানে যতগুলি স্ত্রীলোক উপস্থিতা থাকিবে মাতা হইতে আরম্ভ করিয়া সকলের নিকটেই ভিক্ষা গ্রহণ করিবে *। সেই সমস্ত ভিক্ষা সঙ্গ্রহ করিয়া আচার্য্যকে নিবেদন করিবে। ৪২–৪৪

तिष्ठत्यहःशेषं वाग्यतः। ४५

भिक्षाचरणान्तकर्मयापितदिवाबहुभागो माणवकः 'अहः शेषं' तद्दिनावशिष्टांशं 'वाग्यतः' संयतवाक् सन् 'तिष्ठति' तिष्ठेत् अवस्थितिं कुर्यात्। ४५

* পুরুষের নিকটে ভিক্ষার কোন উল্লেখ থাকিল না, বোধহয় ভিক্ষাদান কার্য্য গৃহিণীরই। সাধারণেও ভিক্ষুকেরা গৃহস্থবাটীতে "ভিক্ষা দাও মা!" বলিয়াই ভিক্ষা করিয়াথাকে। কাশীতে ব্রহ্মচারীরাও গৃহস্থের দ্বারে উপস্থিত হইয়া "ভবতি! ভিক্ষাং দেহি" বাক্যের দ্বারাই অন্নভিক্ষা করিয়া থাকেন দেখা গিয়াছে অতএব পিতাদির নিকটে ভিক্ষা প্রার্থনা ও গ্রহণ ব্যবহার, পিতাদির ভিক্ষাদান বাঞ্ছা সাফল্যের জন্যমাত্র।

এই সমস্ত কার্য্য করিতেই মাণবকের প্রায় সমস্ত দিবা অতিবাহিত হইবে, যাহা কিছু দিবাভাগ অবশিষ্ট থাকিবে, তাহা সংযতবাক্ থাকিয়া স্থিরভাবে বিশ্রাম করত যাপন করিবে। ৪৫

**অস্তমিতে সমিধমাদধাত্যগ্নয়ে সমিধমাহার্ষমিতি ।৪৬**

**'অস্তমিতে' দিবাকরে 'অগ্নয়ে সমিধমাহার্ষম্ (ম॰ ব্রা॰ ১,৬,৩২)'—'ইতি' মন্ত্রং পঠন্ 'সমিধম্' সমিৎকাষ্ঠৈকম্ 'আদধাতি' অগ্নাবিতি শেষঃ। ৪৬**

পরে সূর্য্যাস্ত হইলে 'অগ্নয়ে সমিধমাহার্ষম্ (মং ব্রাং ১, ৬,৩২)' মন্ত্র পাঠ করত অগ্নিতে একখানি সমিৎকাষ্ঠ প্রদান করিবে। ৪৬

**ত্রিরাত্রমক্ষারলবণাশী ভবতি। ৪৭**

**'ত্রিরাত্রং' তদ্দিনপ্রভৃতি দিনত্রয়ম্ 'অক্ষারলবণাশী' ক্ষারলবণভিন্নভোজী 'ভবতি' ভবেৎ। ৪৭**

উপনয়ন দিন হইতে দিবসত্রয় ক্ষারলবণ ভোজন করিবে না। ৪৭

**তস্যান্তে সাবিত্রশ্চরুঃ। ৪৮**

**'তস্য' দিনত্রয়স্যান্তে চতুর্থাহে 'সাবিত্রঃ' সবিতৃদেবতাকঃ 'চরুঃ' পক্তব্যঃ হোতব্যশ্চেতি সুতরামাগতঃ। ৪৮**

এই তিন দিবসের পরে চরু পাক করিয়া সবিতা দেবতার উদ্দেশে আহুতি প্রদান করিবে। ৪৮

## यथार्थम् । ४९

अनन्तरं 'यथार्थम्' यथाप्रयोजनं विहरणविश्रामादिकं कुर्यात् । ४९

এইরূপে উপনয়ন সংস্কার শেষ হইলে যথা প্রয়োজন অপর কার্য্যাদি করিবে । ৪৯

## गौर्दक्षिणा । ५० ॥ १०

उपनयनसंस्कारस्यैतस्य 'दक्षिणा' 'गौः' एकैवेति समाप्त मुपनयनम् ॥ ५० ॥ १०

এই উপনয়ন সংস্কারের দক্ষিণা একটি গাভী ॥ ইতি উপনয়ন ॥ ৫০

इति सामवेदीये गोभिलगृह्यसूत्रे द्वितीयप्रपाठके दशमखण्डस्य व्याख्यानं सामश्रमिकृतं समाप्तम् । २, १०

॥ समाप्तश्चायं द्वितीयः प्रपाठकः ॥ २ ॥

দ্বিতীয় অধ্যায়ের দশম খণ্ডের অনুবাদ সমাপ্ত ॥ ২, ১০

দ্বিতীয় অধ্যায়ও সমাপ্ত ॥ ২

